॥ श्रीयोगमीनाक्षीस्तोत्रम् ॥

शिवानन्दपीयूषरत्नाकरस्थां शिवब्रह्मविष्ण्वामरेशाभिवन्द्याम् ।
शिवध्यानलग्नां शिवज्ञानमूर्तिं शिवाख्यामतीतां भजे पाण्ड्यबालाम् ॥ १॥

शिवादिस्फुरत्पञ्चमञ्चाधिरूढां धनुर्बाणपाशाङ्कुशोत्भासिहस्ताम् ।
नवीनार्कवर्णां नवीनेन्दुचूडां परब्रह्मपत्नीं भजे पाण्ड्यबालाम् ॥ २॥

किरीटाङ्गदोद्भासिमाङ्गल्यसूत्रां स्फुरन्मेखलाहारताटङ्गभूषाम् ।
परामन्त्रकां पाण्ड्यसिंहासनस्थां परन्धामरूपां भजे पाण्ड्यबालाम् ॥ ३॥
ललामाञ्चितस्निग्धफालेन्दुभागां लसन्नीरजोत्फुल्लकल्हारसंस्थाम् ।
ललाटेक्षणार्धाङ्गलग्नोज्ज्वलाङ्गीं परन्धामरूपां भजे पाण्ड्यबालाम् ॥ ४॥

त्रिखण्डात्मविद्यां त्रिबिन्दुस्वरूपां त्रिकोणे लसन्तीं त्रिलोकावनम्राम् ।
त्रिबीजाधिरूढां त्रिमूर्त्यात्मविद्यां परब्रह्मपत्नीं भजे पाण्ड्यबालाम् ॥ ५॥

सदा बिन्दुमध्योल्लसद्वेणिरम्यां समुत्तुङ्गवक्षोजभारावनम्राम् ।
क्वणन्नूपुरोपेतलाक्षारसार्द्रस्पुरत्पादपद्मां भजे पाण्ड्यबालाम् ॥ ६॥

यमाद्यष्टयोगाङ्गरूपामरूपामकारात्क्षकारान्तवर्णामवर्णाम् ।
अखण्डामनन्यामचिन्त्यामलक्ष्याममेयात्मविद्यां भजे पाण्ड्यबालाम् ॥ ७॥

सुधासागरान्ते मणिद्वीपमध्ये लसत्कल्पवृक्षोज्ज्वलद्बिन्दुचक्रे ।
महायोगपीठे शिवाकारमञ्चे सदा सन्निषण्णां भजे पाण्ड्यबालाम् ॥ ८॥

सुषुम्नान्तरन्ध्रे सहस्रारपद्मे रवीन्द्वग्निसम्युक्तचिच्चक्रमध्ये ।
सुधामण्डलस्थे सुनिर्वाणपीठे सदा सञ्चरन्तीं भजे पाण्ड्यबालाम् ॥ ९॥
षडन्ते नवान्ते लसद्द्वादशान्ते महाबिन्दुमध्ये सुनादान्तराळे ।
शिवाख्ये कलातीतनिश्शब्ददेशे सदा सञ्चरन्तीं भजे पाण्ड्यबालाम् ॥ १०॥

चतुर्मार्गमध्ये सुकोणान्तरङ्गे खरन्ध्रे सुधाकारकूपान्तराळे ।
निरालम्बपद्मे कलाषोडशान्ते सदा सञ्चरन्तीं भजे पाण्ड्यबालाम् ॥ ११॥

पुटद्वन्द्वनिर्मुक्तवायुप्रलीनप्रकाशान्तराले ध्रुवोपेतरम्ये ।
महाषोडशान्ते मनोनाशदेशे सदा सञ्चरन्तीं भजे पाण्ड्यबालाम् ॥ १२॥

चतुष्पत्रमध्ये सुकोणत्रयान्ते त्रिमूर्त्याधिवासे त्रिमार्गान्तराळे ।
सहस्रारपद्मोचितां चित्प्रकाशप्रवाहप्रलीनां भजे पाण्ड्यबालाम् ॥ १३॥

लसद्द्वादशान्तेन्दुपीयूषधारावृतां मूर्तिमानन्दमग्नान्तरङ्गाम् ।
परां त्रिस्तनीं तां चतुष्कूटमध्ये परन्धामरूपां भजे पाण्ड्यबालाम् ॥ १४॥

सहस्रारपद्मे सुषुम्नान्तमार्गे स्फुरच्चन्द्रपीयूषधारां पिबन्तीम् ।
सदा स्रावयन्तीं सुधामूर्तिमम्बां परञ्ज्योतिरूपां भजे पाण्ड्यबालाम् ॥ १५॥

नमस्ते सदा पाण्ड्यराजेन्द्रकन्ये नमस्ते सदा सुन्दरेशाङ्कवासे ।
नमस्ते नमस्ते सुमीनाक्षि देवि नमस्ते नमस्ते पुनस्ते नमोऽस्तु ॥ १६॥